

SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:8, Issue: 6
September-2021, Price Rs.5/-.
No. of pages-24.

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

## सचित्रमासपत्रिका

सेप्टेम्बर् २०२१ रू.५/-

नमस्ते देवदेवश
वराहवदनाच्युत।
क्षीरसागरसङ्काश
वज्रशृङ्ग महाभुज॥




**०७-१०-२०२१**
**बृहस्पतिवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**०८-१०-२०२१**
**भृगुवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**०९-१०-२०२१**
**मन्दवासरः**
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपम्

**१०-१०-२०२१**
**भानुवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**११-१०-२०२१**
**इन्दुवासरः**
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

**१२-१०-२०२१**
**भौमवासरः**
प्रातः - हनुमद्वाहनम्
रात्रौ - गजवाहनम्

**१३-१०-२०२१**
**सौम्यवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**१४-१०-२०२१**
**बृहस्पतिवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**१५-१०-२०२१**
**भृगुवासरः**
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्

## गीतामृतम्



तान् समीक्ष्य स कौन्तेयः
सर्वान् बन्धून् अवस्थितान्।
कृपया परयाविष्टो विषीदन् इदमब्रवीत्।

(भगवद्गीता २७/१)

कुन्तीपुत्रः अर्जुनः तत्र वर्तमानान्
पूर्वोक्तान् सर्वान् बन्धून् सम्यक् वीक्ष्य
उत्कृष्टया कृपया व्याप्तः शोचन् सन्
वक्ष्यमाणं वचनम् अब्रवीत्।
(आप्रथमाध्यायं)

## सङ्कीर्तनम्





दन्तच्छदमुद्रामदनास्रल-
तांतशान्तिकृतिरहो भवति ।।दन्त।।

वनिताकुचयोर्वरमकरिका-
र्जितशशिचिह्नं सफलमिदं
घनकरुणामयि घटय चन्द्र इ-
त्यनुनयकारणमहो भवति ।।दन्त।।

सतिमणिविलसत्करमूले
चतुरलाञ्छनं सफलमिदं
व्रतति भयहृते वरदास्य कलन-
मतिघूताकृतिरहो भवति ।।दन्त।।

तरणितनुगन्धविलेपन वि-
स्तर सौभाग्यं सफलमिदं
परिरम्भसुखे तिरुवेङ्कटगिरि-
हरेः पूजनमहो भवति ।।दन्त।।

(अन्नमाचार्यसङ्कीर्तनम्)

# वेदोऽखिलो धर्ममूलम्

'सर्वधर्माणां मूलं वेद एव' - मनुः, गौतमः, पराशरादयः स्मृतिकर्तारः सर्वेऽपि इदमेव मतमुद्घाटितवन्तः। अस्माकं सनातनधर्मस्य सर्वस्यापि मूलं वेद इत्यतः एव तं वेदम् आधारीकृत्य धर्मशास्त्राणि, याज्ञवल्क्यादिस्मृतयः, पुराणानि, उपपुराणानि, इतिहासाश्च उद्भूताः। तद्वदेव काव्य-नाटक-सङ्गीत-नाट्य-शिल्पादिकलाः वैद्यवैज्ञानिकविद्याश्च वेदमूलकाः समुल्लसन्ति।

वेदविद्यां मात्रास्वराक्षरादियुतग्रन्थरूपेण अध्ययन-अध्यापनादिपद्धत्या परिरक्षणे स्वजीवनविधानमवलम्बयन्तः वर्गीयजनाः अनादिकालतः निरतप्रयत्नं वितन्वन्ति। एवंसत्यपि वेदबोधिततथ्यं धर्मं समान्यजनानपि बोधयितुं महर्षयः मन्वादिस्मृतीतिहासपुराणानि परिनिष्ठतरूपेण निरूपितवन्तः। एभिः साकं आगमशास्त्राणि, मन्त्रशास्त्राणि इत्यादयोपि वेदमूलकाः सन्तः अभिवृद्धिपथमागताः।

''वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत् साक्षात् रामायणात्मना।।''

'वेदवेद्यः रामः यदा अवततार तदा वाल्मीकेः सकाशात् वेदः रामायणात्मना आसीत्' इति श्लोकस्तु सुपरिचित एव।

''रामायणं वेदसमम्''
''भारतं पञ्चमो वेदः''
''निगमकल्पतरोर्गलितं फलं भागवतम्''
''इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्''
''चतुर्वेदसमुद्भवम्'' इत्यादिवाक्यानि सुस्पष्टमवगमयन्ति यत् रामायण-महाभारत-भगवत-नाट्य-सङ्गीतादिशब्दोपलक्षितानि सर्वाणि शास्त्राणि वेदमूलकान्येवेति।

''सामवेदजनितं सङ्गीतम्'' इति सङ्गीतकोविदाः त्यागराजादयः अपि स्पष्टीकृतवन्तः।

अस्मदीयविद्याः शास्त्राणि च न पुस्तकाधारितानि किन्तु अनाद्यागममूलकानि इति देशस्वभाव-सम्प्रदाय-विज्ञानादिपटुत्वदर्शनेन प्रस्फुटमवगम्यते।

अयमस्माकं देशः वेदभूमिरिति प्रसिद्धः। वेदादारभ्य जानपदगीतानि पर्यन्तं अस्मदीयसनातनधर्मः महात्मभिः विस्तारितः। एतादृशानन्तपरिधिपरिमितत्वादेव सनातनधर्मवृक्षः अचञ्चलत्वेन उल्लसति।

अस्मिन् वृक्षे स्थितानाम् अश्रितानां शाखानां, लतानां, पुष्पाणां, फलानां सर्वेषामपि वेदोक्तधर्म एव मूलम्। तत्र मूले एव कुठारं संस्थाप्य धर्णभ्रष्टान् ये गमयितुं प्रयतन्ते तेभ्यः अस्य रक्षणमस्माकम् आद्यकर्तव्यम्।

अतः वेदशास्त्राणि रक्षयामः, मानवजातिमपि धर्ममार्गे प्रेरयामः। वेदवेद्यस्य श्रीनिवासस्य कृपाश्रयाः भवेम।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०६

## सेप्टेम्बर् २०२१

श्री प्लवनामसंवत्सरस्य श्रावणकृष्णदशमी तः
प्लवनामसंवत्सरस्य भाद्रपदकृष्णनवमीपर्यन्तम् - १९४१



मुखचित्रम् - तिरुमल वराहस्वामिनः विग्रहः

अन्तिमरक्षापुटः - तिरुचानूरु श्रीपद्मावतीदेवी

गौरवसम्पादकः:-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# यज्ञो वै विष्णुः

- देसु चैतन्यकृष्णः, (शोधच्छात्रः)
चरवाणी - ९३९२४५३०४२

**अग्निवायुरविभ्यस्तु, त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिध्यर्थं, ऋग्यजुः सामलक्षणम्।
इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्माणं वाचः परमं व्योम।।**

वेदः द्विविधः। मन्त्ररुपो ब्राह्मणरूपश्चेति। 'मन्त्रब्राह्मणयोः वेदनामधेयम्' इति कात्यायन-आपस्तम्बादिभिः ज्ञायते। तत्र ब्राह्मणपदं निरूप्यते- 'ब्रह्मणो वेदस्य मन्त्रराशेरिदं नाम यज्ञक्रिया वस्तुतत्त्वादि निरूपकं प्रवचनं ब्राह्मणम्' इति ब्राह्मणशब्दस्य निरूपणम्। ब्रह्मशब्दस्य मन्त्ररूपार्थस्तु वेदेनैव दर्शितः। तथाहि 'ब्रह्म वै मन्त्रः' (श.ब्रा.७.१.१.५) इति। यथा 'पवित्रे करोति' इत्यत्र 'पवित्रे स्थो वैष्णव्यौ' (वाजसनेयीसंहिता.१.१२) इत्युमुं मन्त्रमादाय 'यज्ञो वै विष्णुः, यज्ञिये स्थ इत्येवैतदाह' (श.ब्रा.१.१.३.१) इति च तस्य प्रवचनलक्षणं ब्राह्मणम् इति अवगम्यते।

यजुर्वेदः कर्मप्रधानवेदः इति कारणात् अस्मिन् वेदे यज्ञसंबन्धिनः विषयाः बहवः प्रस्तुताः। तत्र अग्निहोत्रादारभ्य अश्वमेधपर्यन्तम् अनेकाः यागाः वर्णिताः। 'यज्ञो वै श्रेष्ठतमं कर्म' इत्यत्र यज्ञः श्रेष्ठतमकर्मरूपेण प्रोक्तः।

**अत्र कर्म चतुर्विधम् -**

१. अप्रशस्तम् २. प्रशस्तम् ३. श्रेष्ठम् ४. श्रेष्ठतमम्

वधबन्धचौर्यादि अप्रशस्तं, बन्धुवर्गपोषणादि प्रशस्तं, स्मृत्युक्तं वापीकूपतडागादिनिर्माणं श्रेष्ठं, श्रुत्युक्तं यज्ञकर्म श्रेष्ठतममिति विभागः।

अत्रावधेयः विषयः वर्तते यत् श्रेष्ठतमकर्म - संसाधनार्थं स्थानं कथं स्यात्? एवंविधस्य श्रेष्ठतमस्य यज्ञस्य निर्वहणार्थं केषां पत्राणां संभारः आवश्यकः? एवं च ऋत्विजां विवरणं यज्ञशालास्वरूपज्ञानम् अत्यावश्यकं भवति।

अतः श्रेष्ठतमयज्ञप्रदेशस्य, यज्ञशालायाः स्वरूपम् अत्र प्रस्तुतम्। मुख्यतया सोमयागशालायाः स्वरूपम् प्रदर्श्यते। परब्रह्मणः परमेश्वररूपिणः यज्ञपुरुषस्य वर्णनं शतपथब्राह्मणे तृतीये अध्वरकाण्डे उपलभ्यते।

देवयजनं जोषयन्ते। स यदेव वर्षिष्ठं स्यात्तज्जोषयेरन् (श.ब्रा.३.१.१.१)

अस्मिन् मन्त्रे वर्षिष्ठस्य देवयजनस्य अर्थात् उन्नतप्रदेशे यागशालायाः अन्वेषणं कुर्युः इति वर्तते। यतोहि देवाः उन्नताचरणैः उन्नतं स्थानं प्राप्तवन्तः, अतः उन्नतप्रदेशे समतले यज्ञशाला भवेदिति अभिप्रायः। सौमिकमहावेद्यां सदोमण्डपं, हविर्धानमण्डपं, धिष्ण्याः, उत्तरवेदिः, यूपः, अग्नीध्रीय-मार्जालीयशालायां चात्वालः इत्यादयः भवन्ति।

तत्र यूपः यज्ञपुरुषस्य शिखा इति, उत्तरवेदिः नासिका इति, सदः स्थानम् उदरमिति, अग्नीध्रीय-मार्जालीयस्थाने हस्ताविति एवं च अन्यानि यज्ञपुरुषस्य अङ्गानि यज्ञपुरुषस्य अङ्गानि प्रतिपादितानि 'नासिका ह वा एषा यज्ञस्य यत् उत्तरवेदिः' (श.ब्र.३.५.१.१२) इत्यादिभिः मन्त्रैः यज्ञपुरुषस्य विवरणं शतपथब्राह्मणे द्रष्टुं शक्नुमः। एषां वैज्ञानिक्यः आख्यायिकाः अपि तत्र आख्याताः। अथ इदानीं यज्ञशालायाः चित्रम् -




**श्रीमद्वादिराजतीर्थैः अश्वधाट्यां रचिते दशावतारस्तोत्रे विद्यमानौ वामनस्तवनपरकौ सुन्दरश्लोकौ वामनजयन्तीं पुरस्कृत्य पाठकान् अवगमयितुं प्रदत्तौ।**

पिङ्गाक्ष विक्रम तुरङ्गादिसैन्य चतुरङ्ग वलिप्त दनुजा-
साङ्गाध्वरस्थ बलि साङ्गावपात हृषिताङ्ग मरालिनुत ते।
श्रृङ्गारपादनख तुङ्गाग्रभिन्न कन काङ्गाण्डपत्तितटिनी -
तुङ्गाति मङ्गल तरङ्गाभिभूत भज काङ्गाघ वामन नमः ॥१॥

ध्यानार्ह वामनतनोनाथ पाहि यजमाना सुरेशवसुधा -
दानाय याचनिक लीनार्थवाग्वशितनानासदस्यदनुज।
मीनाङ्कनिर्मलनिशानाथकोटिलसमानात्म मौञ्जिगुण कौ-
पीनाच्छसूत्रपदयानातपत्रकरकानम्यदण्डवरभृत् ॥२॥





# केरलीयज्योतिषशास्त्रानुसारेण

## प्रश्नभागस्य वैविध्यम्

- के.बि.वैशाखन्
चरवाणी - ९९८५१७७०६४

ज्योतींषि ग्रहनक्षत्राणि एषां गतिस्थित्यवबोधकं भवति ज्योतिश्शास्त्रम्। अपरिमिते गगनमण्डले यानि तेजोमयानि बिम्बानि दृश्यन्ते, तानि सर्वाण्येव समष्ट्या ज्योतिश्शब्देनोच्यन्ते। प्रतिदिनं भिन्नभिन्नगतिषु ग्रहशब्देन तेष्वपि पुनः केचिदमृतमयकिरणाः, केचित् विषमयकिरणाः, केचिदुभयमिश्रकिरणाः, केचित्तूभयधर्महीनरश्मयश्च स्मृताः। एवंविधनक्षत्रग्रहतारकादिज्योतिष्पिण्डानां स्थिति-गति-प्रभवादिवर्णनपरं शास्त्रमेव ज्योतिषपदेनाभिधीयते। वस्तुतस्तु शास्त्रमिदं ज्योतिषं ज्योतिर्विषयकम्। न केवलमिदं व्युत्पत्तिभिर्वाऽपितु लगधमारभ्य कमालाकरभट्टपर्यन्तं ये खल्वाकरग्रन्थाः प्रणीतास्तत्र शास्त्रमिदं ज्योतिशशब्देनैव व्यवहृतं दृश्यते।

शास्त्रमिदं सिद्धान्त-संहिता-होराभेदेन त्रिषु स्कन्धेषु विभक्तमिति त्रिस्कन्धज्योतिषशब्देनापि ज्ञायते। तत्रादौ गणितशब्देनाभिधीयते। स्कन्धोऽयमपि ग्रहगणित-पाटीगणित-बीजगणितभेदेन त्रिविधः। संहितास्कन्धः कालचक्रं विवृणोति। मुहूर्ताद्यार्षत्वेन बार्हस्पत्य-कश्यप-नारदसंहिताः सम्प्रति दृश्यन्ते। होरास्कन्धस्तु जातक-ताजिकभेदेन द्विधा विभक्तोऽस्ति। अयमेव फलितज्योतिपनाम्ना व्यवह्रियते।

ज्योतिश्शास्त्रे केरलीयपद्धतौ बहुविधाः प्रश्नाः सन्ति। आरूढनिर्णयभेदेन एतेषां नामानि भिद्यन्ते। प्रश्नशास्त्रोक्त-सकलविधानानां परिपूर्णः प्रश्नः अष्टमङ्गलप्रश्नः इत्युच्यते। तत्र केषाञ्चन अङ्गानां परित्यागेन स्वर्णारूढप्रश्नः, आरूढप्रश्नः, तत्कालप्रश्नः इत्यादयः अन्ये प्रश्नाः भवन्ति। आरूढनिर्णयभेद एव प्रश्नवैविध्ये मुख्यं कारणम्। अतः आरूढनिर्णयः आदौ विचार्यते।

**आरूढनिर्णयः -** यथा जातके लग्नोदयराशिः प्रधानः, तथा प्रश्नशास्त्रे आरूढराशिः। आरूढराशिर्नाम कः? प्रश्ने आरूढराशिः कथं निर्णीयते? अस्मिन् प्रश्नशास्त्रे अमुं विषयमधिकृत्य बहवः अभिप्रायाः सन्ति। तेषु केषाञ्चन अभिप्रायाणां सङ्ग्रहमत्र करोमि।

''आरूढत्वात् पृच्छकेन राशिरारूढम् उच्यते'' (प्रश्नमार्गः, २-१०) इति प्रश्नमार्गकारः प्रधानम् आरूढलक्षणं कथयति। पृच्छकः यं राशिम् अधिरूढः सन् प्रश्नं करोति स एव आरूढराशिः। पृच्छकाधिष्ठितप्रदेशस्य राशिनिर्णयस्तु इत्थं भवति-

दैवज्ञस्य विष्वक् द्वादशराशयः वर्तन्ते। तेषु पूर्वदिशि मेषवृषौ, अग्निकोणे मिथुनं, दक्षिणे कर्कसिंहौ, नैर्ऋत्यां दिशि कन्या, पश्चिमायां तुलावृश्चिकौ, वायुकोणे धनुराशिः, उत्तरस्यां मकरकुम्भौ, ऐशान्यां मीनराशिः इति स्थितिः। तेषु यद्राशिसम्बन्धिभूविभागे स्थितः प्रष्टा पृच्छति स एव राशिः, पृच्छकान् आरूढत्वात् आरूढराशिरित्यन्वर्थं नाम भजते। स च प्रष्टा शुभाशुभदैवेन सम्प्रेर्यमाणः द्वादशसु

राशिषु यं कमपि राशिमाश्रित्य पृच्छतीति, प्रश्नफलनिर्णये आरूढराशेः प्राधान्यम्।

पूर्वोक्तक्रमेण आरूढराशेः निर्णये काश्चन बाधाः सन्ति। यथा - दैवज्ञः पूर्वाभिमुखः सन् उपविशति। समागतः पृच्छकस्य स्थितिः प्रायेण मीनादिषु चतुर्षु राशिषु एव स्यात्। सर्वदा ते चत्वारः राशयः एव आरूढाः भवेयुः। दैवज्ञस्य पृष्ठतः स्थिताः कन्यादयः चत्वारः राशयः कदापि आरूढराशयः न भवेयुः इत्येका अव्याप्तिः।

अपरा च असङ्गतिः। राशिसन्धिषु यदि पृच्छकः तिष्ठति तदानीमपि आरूढनिर्णये अनिश्चयः स्यात्। पृच्छकस्य एकः पादः एकस्मिन् राशौ, अपरः अन्यस्मिन् राशौ तिष्ठति चेदपि सन्धिस्थित्या अनिश्चयाद् आरूढराशिः न ज्ञायते।

दैवज्ञस्य विष्वक् द्वादशसु राशिस्थानेषु द्वादशासनानि कल्पयित्वा मध्ये यदि दैवविद् चक्रवत् भ्रमति आसने उपविशति तदानीं पृच्छकस्य दैवप्रेरणवशात् यत्र कुत्रापि राशौ उपवेष्टुम् अवकाशः स्यात्। एवं पूर्वोक्तक्रमेणैव आरूढराशिः निर्णेतुं शक्यते चेत् एष एव क्रमः अत्यन्तं समीचीनः न्याय्यश्च स्यात्। परन्तु एतादृशी व्यवस्था बहुत्र नास्तीति हेतोः पृच्छकाधिष्ठितराशिवशात् आरूढनिर्णयः समीचीनो न स्यात्। तदर्थं एतद्विधानं परित्यज्य अपरः शास्त्रीयः आरूढनिर्णयक्रमः प्रश्नग्रन्थेषु प्रतिपादितः।

**तस्मिन्ननिश्चिते चक्रं विलिख्यास्मिन् सुपूजिते।**
**प्रष्टा स्वर्णेन यं राशिं स्पृशेदारूढ एव सः।। इति।।**

(प्रश्नमार्गः२-११)

**स्वर्णारूढप्रश्नः** - राशिचक्रं भूमौ विलिख्य चक्रमध्यस्थिते पद्मे पीठपूजापुरस्सरं दक्षिणामूर्तिस्वरूपिणं शिवं पञ्चाक्षर्या आवाह्य पूजयेत्। तत्परिवारत्वेन द्वादशराशीन्, तद्दिवसीयग्रहस्थित्यनुसारं राशिषु नवग्रहान् गुलिकं च राशिचक्रे पूजयेत्। राशिचक्रं परितः -

**काञ्चनं दर्पणं पुष्पमक्षतं फलसञ्चयः।**
**ताम्बूलं वसनं ग्रन्थश्चाष्टमङ्गलमिष्यते।।**

(अष्टमङ्गलद्रव्याणां सम्प्रदायः।)

**समुत्खं दर्पणं स्वर्णं पुष्पाक्षतफलानि च।**
**ताम्बूलं ग्रन्थं अष्टमङ्गलमुदीरितम्।।**

(देवप्रश्नमुक्तावलिः)

**ताम्बूलं अक्षतं चैव क्रबुकं दारुभाजनं।**
**अम्बरं दर्पणं ग्रन्थं दीपमित्यष्टमङ्गलम्।।**

(देवप्रश्नमुक्तावलिः)

इत्युक्तान् अष्टौ मङ्गलपदार्थान् न्यसेत्। पूजायाः ब्रह्मार्पणान्ते वाग्देवी गुरुं च अष्टमङ्गलेषु पूजयेत्। दीपे श्रियं च पूजयेत्। एकस्मिन् मुखे लक्ष्मीचिह्नयुक्तं स्वर्णं पत्रे विन्यस्य कुसुमम् अक्षतमपि योजयेत्। तत्पत्रं वामहस्ते निधाय अन्येन पाणिना पिधाय साष्टशतं पञ्चाक्षरीम् अन्यानपि मनून् यथाशक्ति जपेत्। ततः कन्या, कुमारः राशिग्रहस्थितिज्ञानशून्यो वा अपरः, राशिचक्रस्थितराशिस्थानेषु दैवप्रेरणया एकत्र स्वरेणविन्यासपूर्वकम् आरूढनिर्णयं कुर्यात्। दीपविघ्नराजग्रहेश्वरान् पुष्पैराराध्य, साक्षतपुष्पकं स्वर्णं अञ्जलौ गृहीत्वा, चक्रं त्रिःप्रदक्षिणीकृत्य, दैवेन सम्प्रेर्यमाणः राशिचक्रे एकत्र राशौ स्वर्णं निक्षिपेत्। एवं स्वर्णेन यं राशिं स्पृशति स एव आरूढराशिः। एवं स्वर्णविन्यासेन निर्णीतः आरूडराशिः स्वर्णारूढराशिरित्युच्यते। उत्तरत्र वक्ष्यमाणं अष्टमङ्गलविभागम् अकृत्वा, केवलं स्वर्णारूढराशिं निश्चित्य प्रश्नकर्म क्रियते चेत् सः स्वर्णारूढप्रश्नः इत्युच्यते।

एवं पूजिते राशिचक्रे स्वर्णविन्यासावसरे, राशिचक्रस्य उत्तरदिग्भागे दैवज्ञः अष्टोत्तरशतं वराटिकाः सम्पूज्य, ताः संस्पृशन् मूर्तित्वेपूर्विकान् मन्त्रान् जप्त्वा, स्वर्णविन्यासक्षणे एव, वराटिकाः उदक्पूर्वं त्रिधा विभजेत्। एष एव अष्टमङ्गलविधिः। त्रिष्वपि स्थानेषु अष्टौ अष्टौ वराटिकाः त्यक्त्वा शिष्टाः संरक्ष्याः। शिष्टाः एव अष्टमङ्गलसङ्ख्याः ज्ञेयाः। ताः सङ्ख्याः आधारीकृत्य -

**वामस्थेन फलं भूतं वर्तमानं तु मध्यतः।**
**दक्षिणस्थेन भावीनि फलानि च विचिन्तयेत्।।**

(प्रश्नमार्गः,७-१)

इत्याद्युक्तदिशा भूतवर्तमानभविष्यत्कालिकानां फलानां निरूपणं क्रियते। अस्मिन् प्रश्नकर्मणि स्वर्णविन्यासेन आरूढनिर्णयः, अष्टमङ्गलसंख्याविभागश्च वर्तते। एषः स्वर्णाष्टमङ्गलप्रश्नः इत्युच्यते। प्रश्नविभागे एषः स्वर्णाष्टमङ्गलप्रश्नः प्रश्नशास्त्रोक्तैः सर्वैः विधिभिः उपेतः अत्युन्नतं स्थानम् अर्हति।

(अनुवर्तते)

# वामनचरितम्

- एल्. कृष्णाचार्यः
चरवाणी - ६३०१८९१४९५



प्रसिद्धेषु भगवदवतारेषु दशसु अन्यतमः प्रसिद्धः अवतारः अस्ति वामनावतारः। तद्विषये किञ्चिदवलोकयामः।

अदितेः तपसा सन्तुष्टः भगवान् हरिः तस्याः गर्भे चतुर्भुजः, चक्र-शङ्ख-गदा-पद्मसहितः सन् वामनरूपेण आविर्बभूव। अतिसुन्दररमणीयकौस्तुभमणिमपि धृतवानासीत् स भगवान् अवतारावसरे।

भागवते -

**द्वादश्यां सविता तिष्ठन् मन्ध्यन्दिनगतो नृप।**
**विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः।।**

भाद्रपदमासे विजयाख्यद्वादश्यां अभिजिन्मुहूर्त्ते श्रीहरेः जन्म अभवत्। अथ पिता कश्यपः तस्य शिशोः जातकर्मादीन् कृतवान्। तदनन्तरं उपनयनसमये स्वयं सूर्यः एव गायत्रीमन्त्रं उपदिदेश। बृहस्पतिः यज्ञोपवीतं, मेखलां कश्यपः, कौपीनं माता अदितिः, छत्रं पृथिवी, भिक्षापात्रं कुबेरः, भिक्षां च पार्वती दत्तवती।

तदनु वटुरूपः वामनः बले अश्वमेधयागविषयं ज्ञात्वा तद्यागशालां प्रविवेश। आगतं तं भगवन्तं वामनं ऋत्विजाः, यागाग्नयः, बलिरपि अर्घ्यपाद्यादीन् दत्वा स्वागतं व्याजह्रुः।

तदा बलिचक्रवर्ती ''भवान् याचकरूपेण आगतवान् इति मन्ये। भवान् यदिच्छति तत्सर्वं ददामि'' इत्युक्तवान्। तच्छ्रुत्वा वामनः एवं उक्तवान्, राजन्! इदं वचः तव कुलकीर्तिं वर्धापयति। प्रह्लादः भवतां कुले ज्येष्ठः। भृगुकुलब्राह्मणाः तव गुरवः। अत एव भवन्मुखात् एतादृशवचः निसृतम् इति।

एकदा विरोचनः महादानं चकार। तच्च किमिति चेत् ब्राह्मणवेषेण आगतवन्तः देवाः इति मत्वापि तेभ्यः तस्य आयुरेव दानरूपेण दत्तवान्। भवानपि वीरः, दानकरणे शूरः च। अतः अहं त्रिपादपरिमितां भूमिं याचे। तद्ददातु इति पृच्छति वामनः।

बलिः एतच्छ्रुत्वा कुपितः सन् 'भवान् बालकः, मूर्खः अपि। अहं त्रिलोकप्रभुः। अतः द्वीपानपि दानरूपेण दातुं शक्नोमि। अतः अन्यत्किमपि याचताम् इति अवदत्।

तदा वामनः, हरेरिच्छया यल्लभ्यते तेनैव तृप्तो भवति चेत् तस्य ब्राह्मणस्य शुभं भवति। नो चेत् जलेन वह्निः यथा शान्तो भवति तथा ब्राह्मणधनमपि नष्टं भवति। अतः मया यत्पृष्टं तावद्ददातु इत्युक्तवान्। तेन हसन् बलिः तथैव पादत्रयपरिमितं भूमिं स्वीकुरु इति दानं कर्तुं प्रवृत्ते सति तस्य गुरवः शुक्राचार्याः एवं ऊचुः।

हे राजन् एषः साक्षात् श्रीमहाविष्णुः। वटुरूपं स्वीकृत्य देवताकार्यसिद्ध्यर्थं अत्रागतवान्। अथ महादनर्थम् अनालोच्य दानप्रमाणम् असमञ्जसम्। एषः इदानीं त्रिविक्रमरूपं धृत्वा द्वाभ्यां पादाभ्यां समस्तब्रह्माण्डम् आवृत्य तृतीयं पादं कुत्र स्थापयामि इति पृच्छति चेत् किं करोषि? इति।

एतदसहमानः तथैव दानं कर्तुम् उद्युक्तः बलिचक्रवर्ती। तेन कुपितः शुक्राचार्यः ''त्वं ऐश्वर्यभ्रष्टो भविष्यसि'' इति बलिं शप्तवान्।

ततः बलिः वामनस्य वटोः पादपूजां कृत्वा तज्जलं शिरसि धृतवान्। याचकरूपेण आगतः शत्रुः इति ज्ञात्वापि दानं कृतवान् इति देवताः स्तुत्वा पुष्पवृष्टिं चक्रुः।

वामनरूपी विष्णुः तदा त्रिविक्रमरूपं धृतवान्। तच्च अन्तरिक्ष-स्वर्ग-पृथिवी-पातालादिव्याप्तमभवत्।

एवं त्रिविक्रमरूपं धृत्वा एकं पादं आब्रह्मणडं व्यापितवान्। तदा तस्य पादनखस्पर्शनेन ब्रह्माण्डात् गङ्गा भुवमागता इत्यपि श्रूयते। सा गङ्गा अत एव विष्णुपादाब्जसंभूता इति प्रसिद्धा। तज्जलं स्वीकृत्य चतुर्मुखब्रह्मा श्रीमन्नारायणस्य त्रिविक्रमरूपस्य पादपूजां चकार। तदा त्रिविक्रमविजयवृत्तान्तः भेरीनादपुरस्सरं सर्वासु दिक्षु पूरितः। एवं वामनस्य लीलां दृष्टवन्तः असुराः क्रोधेन वामनं प्रति योद्धुम् आगतवन्तः। नन्द-सुनन्द-जय-विजय-गरूडादयः तेषां प्रतिरोधं चक्रुः। तृतीयं पादं मम शिरसि स्थापयतु इति बलिवचनानुसारं तद्वदाचरति परमात्मा। तदा तं बलिं पातालं सम्प्रेष्य श्रीहरिः वामनः तं धन्यजीविनं कृतवान् तदनु सर्वेऽपि देवाः सन्तुष्टाः निरामयाश्च आसन्। अत्र एतदवगम्यते यत् बलिः यद्यपि असुरः। तथापि सः स्वाभाविकतया हरिभक्तः इति।

एवंरूपेण लोककल्याणं विधाय स्वीयावतारं शमयति भगवान्नारायणः इति।



# धन्वन्तरिध्यानम्



अच्युतानन्त गोविन्द
विष्णो नारायणऽमृत।
रोगान्मे नाशयाऽशेषान्
आशु धन्वन्तरे हरे ॥१॥

आरोग्यं दीर्घमायुष्यं
बलं तेजो धियं श्रियम्
स्वभक्तेभ्योऽनुगृह्णन्तं
वन्दे धन्वन्तरिं हरिम् ॥२॥

धन्वन्तरेरिमं श्लोकं
भक्त्या नित्यं पठन्ति ये।
अनारोग्यं न तेषां स्यात्
सुखं जीवन्ति ते चिरम् ॥३॥

ओं नमो भगवते वासुदेवाय धन्वन्तरये
अमृतकलशहस्ताय वज्रजलौकहस्ताय
सर्वामयविनाशनाय त्रैलोक्यनाथाय
श्रीमहाविष्णवे स्वाहा।

ओं वासुदेवाय विद्महे सुधाहस्ताय धीमहि
तन्नो धन्वन्तरिः प्रचोदयात्।

# श्री वराहाष्टोत्तरशतनामावलिः

ओं श्रीवराहाय नमः
ओं महीनाथाय नमः
ओं पूर्णानन्दाय नमः
ओं जगत्पतये नमः
ओं निर्गुणाय नमः
ओं निष्कलाय नमः
ओं अनन्ताय नमः
ओं दण्डकान्तकृते नमः
ओं अव्ययाय नमः
ओं हिरण्याक्षान्तकृते नमः १०
ओं देवाय नमः
ओं पूर्णषाड्गुण्यविग्रहाय नमः
ओं लयोदधिविहारिणे नमः
ओं सर्वप्राणिहिते रताय नमः
ओं अनन्तरूपाय नमः
ओं अनन्तश्रिये नमः
ओं जितमन्यवे नमः
ओं भयापहाय नमः
ओं वेदान्तवेद्याय नमः
ओं वेदिने नमः २०
ओं वेदगर्भाय नमः
ओं सनातनाय नमः
ओं सहस्राक्षाय नमः
ओं पुण्यगन्धाय नमः
ओं कल्पकृते नमः
ओं क्षितिभृते नमः
ओं हरये नमः
ओं पद्मनाभाय नमः
ओं सुराध्यक्षाय नमः
ओं हेमाङ्गाय नमः ३०
ओं दक्षिणमुखाय नमः
ओं महाकोलाय नमः
ओं महाबाहवे नमः
ओं सर्वदेवनमस्कृताय नमः
ओं हृषीकेशाय नमः
ओं प्रसन्नात्मने नमः
ओं सर्वभक्तभयापहाय नमः
ओं यज्ञभृते नमः
ओं यज्ञकृते नमः
ओं साक्षिणे नमः ४०
ओं यज्ञाय नमः
ओं यज्ञवाहनाय नमः
ओं हव्यभुजे नमः
ओं हव्यदेवाय नमः
ओं सदाव्यक्ताय नमः
ओं कृपाकराय नमः
ओं देवभूमिगुरवे नमः
ओं कान्ताय नमः
ओं धर्मगुह्याय नमः
ओं वृषाकपये नमः ५०
ओं स्रवत्तुण्डाय नमः
ओं वक्रदंष्ट्राय नमः
ओं नीलकेशाय नमः
ओं महाबलाय नमः
ओं पूतात्मने नमः
ओं वेदनेत्रे नमः
ओं वेदहर्तृशिरोहराय नमः
ओं वेदान्तविदे नमः
ओं वेदगुह्याय नमः
ओं सर्ववेदप्रवर्तकाय नमः। ६०
ओं गभीराक्षाय नमः
ओं त्रिधाम्ने नमः
ओं गभीरात्मने नमः
ओं अमरेश्वराय नमः
ओं आनन्दवनगाय नमः
ओं दिव्याय नमः
ओं ब्रह्मनासासमुद्भवाय नमः
ओं सिन्धुतीरनिवासिने नमः

ओं क्षेमकृते नमः
ओं सात्त्वतां पतये नमः ७०
ओं इन्द्रत्रात्रे नमः
ओं जगत्त्रात्रे नमः
ओं इन्द्रदोर्दण्डगर्वघ्ने नमः
ओं भक्तवश्याय नमः
ओं सदोद्युक्ताय नमः
ओं निजानन्दाय नमः
ओं रमापतये नमः
ओं श्रुतिप्रियाय नमः
ओं शुभाङ्गाय नमः
ओं पुण्यश्रवणकीर्तनाय नमः ८०
ओं सत्यकृते नमः
ओं सत्यसङ्कल्पाय नमः
ओं सत्यवाचे नमः
ओं सत्यविक्रमाय नमः
ओं सत्यनिगूढाय नमः
ओं सत्यात्मने नमः
ओं कालातीताय नमः
ओं गुणाधिकाय नमः
ओं परस्मै ज्योतिषे नमः
ओं परस्मै धाम्ने नमः ९०
ओं परमाय पुरुषाय नमः
ओं पराय नमः
ओं कल्याणकृते नमः
ओं कवये नमः
ओं कर्त्रे नमः
ओं कर्मसाक्षिणे नमः
ओं जितेन्द्रियाय नमः
ओं कर्मकृते नमः
ओं कर्मकाण्डस्य
सम्प्रदायप्रवर्तकाय नमः
ओं सर्वान्तकाय नमः १००



ओं सर्वगाय नमः
ओं सर्वार्थाय नमः
ओं सर्वभक्षकाय नमः
ओं सर्वलोकपतये नमः
ओं श्रीमते श्रीमुष्णेशाय नमः
ओं शुभेक्षणाय नमः
ओं सर्वदेवप्रियाय नमः
ओं साक्षिणे नमः १०८

॥इति श्रीवराहाष्टोत्तरशतनामावलिः॥







२२.०८.२०२१ तिरुपति श्रीगोविन्दराजस्वामिनः मन्दिरे "ऐना महल्" पुनःप्रारम्भोत्सवं ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि, ऐ.ए.एस्., महोदयाः कृतवन्तः। अस्मिन् कार्यक्रमे श्री श्री श्री पेद्दजीयर् महाभागाः, ति.ति.दे. संयुक्तकार्यनिर्वहणाधिकारिणी श्रीमती सदाभार्गवी, ऐ.ए.एस्., तथा इतरोन्नताधिकारिणश्च भागं गृहीतवन्तः।





दि.१८.०८.२०२१ तः दि.२०.०८.२०२१ पर्यन्तं तिरुमलालये आचरितः उभयदेवेरीसमेतश्रीमलयप्पस्वामिनः पवित्रोत्सवः। अस्मिन् च ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्.जवहर् रेड्डि, ऐ.ए.एस्., सपत्नीकाः ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मारेड्डि, ऐ.डी.ई.एस्. महाभागाः तथा इतरोन्नताधिकारिणश्च भागं गृहीतवन्तः।



तिरुपतिस्थगोशालायां ३०.०८.२०२१ दिनाङ्के ति.ति.दे. सम्बद्धमन्दिरेषु उपयुक्तपुष्पमालानिर्माल्येन अगरबत्ती (धूपकाष्ठ) निर्माणं प्रारब्धमस्ति। तदन्तर्गतत्वेन गोशालानिरीक्षकाः ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्.जवहर् रेड्डि, ऐ.ए.एस्. महाभागाः



दि.३०.०८.२०२१ श्रीकृष्णाष्टामीपर्वदिनं पुरस्कृत्य श्रीस्वामिनः नवनीतसेवायां नवनीतमथने ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्.जवहर् रेड्डि महाभागाः। तत्र वीक्षकाः ति.ति.दे. अध्यक्षाः श्री वै.वि.सुब्बारेड्डि तथा इतरोन्नताधिकारिणश्च।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

## (विजयदासकृतिषु)

**तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु**

**संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः**

**चरवाणी - ९४९४२४८३४८**

कदा तं भगवन्तं पश्यामि, तस्य पुरतः दण्डायमानो भूत्वा संस्तुत्य सन्तोषं प्राप्नोमि इति विजयदासवर्यः चिन्तयति स्म। तदा एकस्मिन् दिने रात्रौ स्वप्ने विजयदासवर्यः उत्सवमण्टपे उपविश्य भक्तैः भक्तवत्सलः इति सेव्यमानं भगवन्तं श्रीनिवासं दृष्ट्वा अमन्दानन्दं प्राप्तवान्। भगवान् श्रीनिवासः सकलाभरणभूषितः ब्रह्मरुद्रादिदेवैः ऋषिपुङ्गवैश्च श्रीवेङ्कटेश्वरः कीर्तितः। ''आपोहिष्टामयोभुव'' इति मन्त्रं वदन्तु इति पुरोहितान् उक्त्वा श्रीनिवासः श्रुणोति।

सकलभूषितनागि अजहरसुरमुनि
निकर कैयिंद स्तुतिसि कोंबनकूड।
आपोहिष्टामयोभुव नेंबोमन्त्र
आपुरोहित निंद कलितु कोंबनकूड।।

एवं सति विजयदासवर्यः मण्टपं प्रविष्टवान्। सपदि भगवतः श्रीनिवासस्य अमृतदृष्टिः विजयदासस्य उपरि प्रसारिता। पुनः भगवान् स्वकीयाङ्गुलीचिह्नैः समीपे आगच्छतु इति आहूय एवम् आदिष्टवान्।

नाल्वत्तुमूरु पदंगलु माडेंदु
हेळिद हेमाद्रिशिखराकारनकूड।
दुंडिगे करदल्लि कोट्टु अमृतकर
मंडि चलि इट्ट महामहिमन कूड।।

माम् अधिकृत्य त्रिचत्वारिंशत् पदानि रचयतु इति स्वयं श्रीनिवासः विजयदासं प्रति उक्त्वा तम्बुरं हस्ते संस्थाप्य, स्वस्य अमृतहस्तौ विजयदासस्य शिरसि स्थापितवान्। तदनु चतुरंतयानेन आलयप्राकारं परितः गत्वा आलये प्रविष्टवान्। (पल्लकि एरि पवलिस्तुति सर्रनेल्लिदे गुडिपोक्क निर्मलनु) एवं प्रकारेण वृत्तान्तोऽयं सञ्जातः।

वार शनि चतुर्दशि कृष्ण पुष्यदि।
ई रीतियलिकंड इन्दिरेशन कूड।।
रौद्रि संवत्सर अर्धरात्रियल्लि
भद्रमूरुतियाद भवहरन कूड।।
गुरुपुरंदरन उपदेशबलदिंद
सिरिविजयविठलन चरणतकैसि।।

रौद्रिनामवत्सरे पुष्यमासे कृष्णचतुर्दशीतिथौ शनिवासरे अर्धरात्रौ एतत् दृश्यं मम गुरुणां पुरंदरदासवर्याणाम् उपदेशबलेन सिरि विजयविठलचरणारविन्दे दृष्ट्वा धन्योऽभवमिति विजयदासवर्यः अकथयत्।

श्रीविजयदासवर्यः भगवतः श्रीनिवासस्य अनुग्रहादेशानुसारं सपदि तिरुमलक्षेत्रं गन्तुम् आरब्धवान्। तिरुमलपुण्यक्षेत्रं गत्वा वेङ्कटाद्रेः सौन्दर्यं वेङ्कटाचलपतेः दर्शनविधानञ्च सुदीर्घे कीर्तने सुलादिषु वर्णितवान्। तेलुगुभाषायां यथा अन्नमाचार्यः 'अयि! सैव श्रीहरिवासः' (अदिवो अल्लदिवो श्रीहरिवासमु) गीतवन्तः तथैव 'दृष्टवान् अहं दृष्टवान्' इति उत्साहेन विजयदासवर्योऽपि भगवतः श्रीनिवासस्य सौन्दर्यवैभवञ्च एवं प्रकारेण वर्णितवान्।

नोडिदे नानोडिदे
मूडलगिरियवासन यात्रेय माडिदे ना माडिदे

("दृष्टवान्, अहं दृष्टवान् पूर्वाभिमुखं दण्डायमानस्य श्रीनिवासस्य दिव्यसन्निधानं प्राप्तवान्)

बेट्टव कंडेनु सोपानंगलु। निट्टु सुरिक्कदे एरिदे।
कट्ट कडियणगोपुर शिखर। दिट्ट कणिलि नोडिदे।।

(आदौ तिरुमलपर्वतं दृष्टवान्। तदनु सोपानानि दृष्टवान्। श्रद्धया सोपानानाम् अधरोहणं कृतवान्। अनन्तरं देवालयस्य गोपुरं दृष्टवान्।

ई समस्तर गुरुवाद भारतीशन पादक्केरगिदे।
क्लेशवकळेदु एदुरागि पोळेव श्रीशनगुडि माहाद्वारव नोडिदे।।

(एवं तिरुमलक्षेत्रं सम्प्राप्य बेडि आञ्जनेयस्य पादौ नमस्कृत्य एकवारं पश्चादपश्यम्, तदा अन्तरङ्गतापोपशमनकारकं श्रीनिवासमन्दिरमहाद्वारं दृष्टवान्।

बलवागि बंदु स्वामि पुष्करिणि। ओळगे वरहननोडिदे।
जलदलि मिंदु वेगदलि। तिरुवेंगलदेवन नोडसागिदे।।

विजयदासवर्याः एवं कथयन्ति -

भगवतः श्रीनिवासस्य आलयनिकटे विद्यमानं पुष्करिणीं तत्रस्थं वराहस्वामिनञ्च दृष्ट्वा, पुष्करिण्यां स्नात्वा उत्साहेन भक्त्या वेगेन च श्रीवेङ्कटेश्वरं दृष्टवान्।

"गुडियपोक्केनु गरुडगंभद पडगरवनु नानीडिदे।
ओडने प्राणाचारदवरु पडेद वरगळ केळिदे।।"

श्रीवेङ्कटेश्वरस्य आलयं प्रविष्टवान्। गरुडस्तम्भं च दृष्टवान्। तत्र योग्याः भक्ताः जीविते नैकान् कष्टनष्टान् जन्मान्तरपापकारणेन अनुभूय सोढुम् अशक्ताश्च जाताः। ते भक्ताः भगवन्तं श्रीनिवासं प्रति हे स्वामिन्! यावत् पर्यन्तं भवान् अस्मान् न अनुगृण्हाति तावत् पर्यन्तं वयं न उत्तिष्ठामः इति साष्टाङ्गदण्डप्रणामान् कुर्वन्ति। तान् भक्तान् श्रीनिवासः अनुगृह्णाति तत् दृश्यम् अहं दृष्टवान्।

मुन्न अवसरमनि वोलगे। अन्नपूर्णेय नोडिदे।
चेन्नागि मंटपदोळु श्रीनिवासन्न माहतिय नोडिदे।।

तदनु किञ्चिद् अन्तः गत्वा भगवतः श्रीनिवासस्य नैवैद्यनिर्माण-पाकशालां तत्रस्थां अन्नपूर्णां (वकुलामातरं) दृष्टवान्। तदनु विमाने विराजमानं भगवन्तं श्रीनिवासम् अपश्यम्।

तोट्टल तीर्थव प्रसादव। इड्डु मारुवुदु नोडिदे
इष्टभक्तरु सम्मुखदल्लि। मुट्टि पाडुवुदु नोडिदे।

(भगवतः तीर्थं स्वीकृत्य तत्रैव प्रसादवितरणं दृष्टवान्। श्रीनिवासस्य भक्ताः स्वामिनः पुरतः भक्त्या स्तुवन्ति, एतत् दृश्यमपि दृष्टवान्।)

द्वार पालकरिगे त्याष्टाङ्गदलि नमस्कारवनु माडिदे।
भोरने कटांजनद फल्गुणि बंगार बागिलव नोडिदे।।

(तदनु गर्भालयस्य उभयपार्श्वयोः (विद्यमानद्वारपालकान् साष्टांगं प्रणिपत्य तदनु भगवतः वेङ्कटेश्वरस्य स्वर्णद्वारं दृष्टवान्।)

इंदु रवि शत कोटि तेजद - इंदिरेशेन पादार-
विंद युग्मव पुलिकोत्सह-दिंद संदरुशन नामाडिदे।।

(तदनु शतकोटिचन्द्रसूर्यतेजसा प्रकाशमानस्य लक्ष्मीपतेः पादारविन्दे दृष्ट्वा पुलकितो भूत्वा उत्साहेन स्वामिनः दर्शनं कृतवान्।)

इट्टिह अंदिगे उट्टपीतांबर - कट्टिह दट्टे वड्याण।
झटि कङ्कणाकरदलायुध - इडि कस्तूरिय नोडिदे।।

(भगवतः श्रीनिवासस्य पादयोः विराजमाने नूपरे, धृतं पीताम्बरं, मेखलां, हस्ते विद्यमानं कङ्कणं नन्दकायुधं कस्तूरीतिलकञ्च दृष्टवान्।)

मासद पुव्वु पूसिद गन्ध - भूषण नाना पटिपरिविध।
एसु बगे दविट्टि श्रीनिवासन शृङ्गार नोडिदे।।

सुगन्धसुन्दरविकसितपुष्पैः गन्धेन नानाविधाभरणैः अलङ्कृतं भगवन्तं श्रीविवासं तस्य सौन्दर्यञ्च दृष्टवान्।

जय जय जगदीश जगन्निवास।
जय जय लकुमिपरितोष।
जय जय विजय सर्वेश जय जय।
सर्वेश जयवेंदु स्तोत्रव माडिदे।।

जय जय जगदीश! इति, हे जगन्निवास! इति, हे लक्ष्मीपरितोष! इति, जय जय विजय! इति, हे विगतनाश! इति, हे सर्वेश! इति जय जय ध्वानं कुर्वन् भगवन्तं श्रीनिवासं स्तुतवान्।

केशक्कि दध्यादन परमान्न दोसि बिसि बिसि मनोहर।
लेसागि चतुर्विध प्रसादवन्नु ईसु अवसर दोडिदे।।

(दध्योदनं मृष्टान्नम् उष्णं मनोहरं दोशा (भोज्यपदार्थविशेषः) इत्यादि चतुर्विधनैवेद्यानि दृष्टवान्।

(अनुवर्तते)



# विद्या - संस्कारः

- डा. स्वर्णसाम्बशिव राव्
चरवाणी - ९९८९४९१६००

प्रतिभा मानवस्य जन्मतः आगच्छति। किन्तु विद्या अभ्यासेन, शिक्षणेन एव प्राप्नोति। सत्यमिदं सर्वे जानन्ति। प्रतिभा भगवद्दत्ता। विद्या साधनश्रमाधारिता भवति। विद्या सूर्यस्य तेजः पुष्पाणि इव विद्यार्थिनः प्रतिभां विकासयति। विद्या केवलं पुस्तकपठनेन वा कण्टस्थप्रक्रियया वा न लभ्यते। विद्या ६४ कलाः अपि गुरुमुखेन शिक्षणीयाः। विद्यया क्रमशिक्षणम्, सत्प्रवर्तनं संस्कारोऽपि वर्धते। विवेकोऽपि विस्तरति। आत्मविश्वासं वर्धापयित्वा सन्मार्गनिर्देशनं च विद्या एव ददाति।

विद्यया एव मोक्षं प्राप्नोति। सा एव अमृतदायिनीति यजुर्वेदः वदति। पापविमोचनमार्गं, कल्याणमार्गं दर्शयति सा विद्या इति वदति मनुस्मृतिः। विद्या एव सर्वेषां सुखानाम् विजयानाम् मूलम्। अपि च विद्यया तपसा मानवः ब्रह्मलोकं प्राप्नोति इति शतपथब्राह्मणे याज्ञवल्क्यमहर्षिणा उक्तम्। विद्याप्रज्ञाभ्यां श्रद्धया किमपि सत्कार्थं संकल्प्य, संपूर्णसाफल्यं प्राप्नोतीति छान्दोग्योपनिषत् कथयति। यास्कमहर्षिणा निरुक्तग्रन्थे विद्यया माननीयः महनीयः भवष्यिति मानवः इति उक्तम्। विद्यया एव मानवः सूर्य इव प्रकाशते इति पूर्वमीमांसाग्रन्थे जैमिनिमुनिना उद्घाटितम्। विद्यया भौतिकसौख्येन सह मोक्षम् अपि प्राप्नोति मानवः इति व्यासेन भगवता वेदान्तशास्त्रे बोधितम्। शरीरस्य, मनसश्च वृद्ध्यै विद्या एव मूलकारणमिति आयुर्वेदग्रन्थे चरकमहर्षिणा उक्तम्। अविद्या नश्यति, विद्या शाश्वती इति श्वेताश्वतरोपनिषद् विशदयति। वैशेषिकदर्शने कणादमहर्षिः विद्याविद्ययोः तुलनात्मकपरिशीलनं कृतवान्। संस्कारस्य बोधनेन विद्या विकसितकुसुममिव सुगन्धं ददाति इति अरविन्दः वर्णितवान्। विश्वे समस्तवस्तूनां सत्यज्ञानं ददाति विद्या इति दयानन्दमहर्षिः वदति।

निरन्तरं ज्ञानगङ्गायाः प्रवाहमिच्छन्तः विद्यातः परं न कोऽप्यस्ति लोके इति तापसिनः, योगिनः, सिद्धयः च कीर्तयन्ति।

समाजे अदरणीयाः सद्गुणाः एव संस्काराः इत्युच्यन्ते। संस्कारवृद्धये विद्या आवश्यकी। केवलं विद्यया एव संस्कारः नोपलभ्यते। विद्यार्थिभिः विद्यया सह मातापितृभ्यां, गुरुभिः, समाजात् संस्कारः अभ्यसनीयः अस्ति। मानवस्य विद्यया एवागतः संस्कारः सम्पदः उज्ज्वलभवितव्यं प्रसादयति।

इदनीं संस्कारः इति पदं आर्जवं इति पदेन आक्रान्तः। समाजे विद्यावत्सु विद्याहीनेषु संस्कारहीनत्वेन भेदः दृश्यते। सर्वेऽपि ते संस्कारहीनाः समाजे अकृत्यानि, अराचकाणि, अत्याचाराणि कर्माणि कुर्वन्तः निरङ्कुशाः भवन्ति। विद्या विज्ञानस्य हेतुः। संस्कारः स्वस्य, समाजश्रेयसः हेतुः। ''विद्या ददाति विनयं'' इति वदति भर्तृहरिः। संस्कारेण सहिता विद्या आत्मशान्तिं प्रददाति। क्षामा मोक्षमार्गाय प्रथमं सोपानम्। तैलदीपे संस्कारः एव तैलं, विद्या एव ज्योतिः। तैलेन विना दीपः न प्रकाशते।

अतः पालकाः कृपया विद्यार्थिनां पाठ्यप्रणालिकायां संस्कारः इति पाठ्यांशं योजयन्तु इति प्रार्थना।



भागः-६

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः (शोधच्छात्रः)
चरवाणी - ९९८९६५७५७६



**आचिनोति हि शास्त्रार्थान् आचारे स्थापयत्यपि।
स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते।।**

आचार्यः कः भवितुम् अर्हति? इति चेत् शास्त्रेषु उक्तान् विषयान् सक्रमं यः जानाति, भिन्नस्थलेषु भिन्नरूपेण स्थितान् विषयान् कथं सङ्ग्रहणीयं? सङ्गृह्य किं कर्तव्यम्? किं न कर्तव्यम्? इत्यादिकर्तव्यताकर्तव्यतादिविषयेषु निश्चायकज्ञानेन शास्त्रविहितं कर्म आचरति, स्वीयशिष्यादीन् विद्यार्थिनः आश्रितांश्च सदाचारे संस्थापयति, सन्मार्गे गमयति सः आचार्यः इति शास्त्रोक्तिः।

आचार्यः नाम गुरुः इति स्वीकुर्मः। स च विविधमार्गैः अर्थात् बालबालिकासु स्थितान् दोषान् निवर्त्य, अतथ्यं पठन्ति चेत् निरन्तरं तत्र दृष्टिं प्रसार्य उपदेशं कुर्वन्तः छात्रान् सक्रममार्गम् आनयन्ति। अस्माकं जीवनपरिवर्तने सन्ततं प्रेरयन्ति ये गुरवः अस्माकं पुण्यफलेनैव लभ्यन्ते।

किञ्च केचन कमपि विषयं कथमवगन्तव्यम्? कथं पठनीयं इति पाठ्यांशान् समीचीनतया बोधयन्ति। पूर्वोक्तोभयमपि एकत्र लभ्यते चेत् तदस्माकं महान् पुण्यविशेष एव नान्यत्।

अथापि केचन बालकान् न पाठयन्ति, विवरणमपि न दास्यन्ति तथापि स्वयं धर्माद्याचरणेन छात्रान्, तेषु विद्यमाननैपुण्यमपि प्रेरयन्ति। यथा एकः गुरुः श्रीमद्भगवद्गीतां, रामायणं, महाभारतं वा पठन् शिष्यं प्रति 'अहं पटन्नस्मि त्वमपि पठ' इति वदति चेत् प्रेरितः सन् शिष्यः अपि तेषां पठने सुमुखः भवति। तादृशाः एव आचार्याः इति प्रथाम् आप्नुवन्ति।

कतिषु जन्मसु प्रार्थयामश्चेत् एतादृशगुरुः लभ्यते अस्माकम्? किन्तु तादृशगुरुः दुर्योधनस्य पार्श्वे अस्ति। द्रोणाचार्यः एतादृशः महान् गुरुः इति ज्ञात्वा अपि 'आचार्य' इति सम्बोधयति चेदपि तस्मिन् स्वारस्यं नानुभूयते। यतोहि अग्रे 'पश्य एतां पाण्डुपुत्राणाम्' इति व्यङ्ग्येन 'भवान् पाण्डवान् प्रत्येव अधिकां विद्याम् अर्पितवान्। कौरवाणाम् अस्माकं तावतीं विद्यां न बोधितवान्। तत्रापि तव पुत्रं अश्वत्थामं प्रत्यपि यानि अस्त्रशस्त्राणि न बोधितवान् तान्यपि अत्यन्तप्रेम्णा अर्जुनं बोधितवान्। तादृशाः पाण्डवाः अर्जुनादयः इदानीं भवन्तमेव हन्मः इतिवत् पुरतः सन्ति, कीदृशज्ञानी अस्ति भवान्' इति उक्तवान् दुर्योधनः।

तेषां निकटे बृहती सेना अस्ति। सप्त अक्षौहिणी सेना पाण्डवानां, एकादश अक्षौहिणीसेना कौरवाणामस्ति। यद्यपि पाण्डवेभ्यः सकाशादपि अधिकसेनाबलमस्ति चेदपि अन्तः असूयया ज्वलति दुर्योधनस्य मनः। कुतः एतादृशी भावना? चेत् पाण्डवाः राज्यभ्रष्टाः, सर्वत्रानुपुयुक्ताः, तेषामिति किञ्चिदपि नास्ति। अतः तेषां पक्षे यः कोऽपि न अन्तर्भवति इति चिन्तितवान् दुर्योधनः। परन्तु पाण्डवाः धर्मदीक्षया सप्त अक्षौहिणीसेनाः आनीतवन्तः। तत्रापि श्रीकृष्णपरमात्मा तेषां पक्षे अस्ति। तदसहमानः सन्नेव ''महतीं चमूम्'' इत्युक्तवान्। यद्यपि स्वीयसैन्ये एव अधिकविश्वासः भवेत्। किन्तु अन्यसैन्ये एवासीत्। आवेशे, बाधायां वा एवं भाषते चेत् सहजतया स्वीकर्तुं शक्यते। सन्दर्भस्तु एवं नासीत् खलु।

(अनुवर्तते)



# गर्वः मनुष्यस्य पतनकारणम्

- श्रीमती मंजूलाजी पतनकोट
चरवाणी - ८१०४३३३४४३

एकस्मिन् नगरे समोदत्तः इति शिल्पी आसीत्। अहमेव उत्तमः शिल्पी इति गर्वः तस्य मनसि आसीत्। एकदा सः एकं मन्दिरं गतवान्। तत्र एकः तपस्वी मिलति। सः तपस्वी तस्मै एवं वदति - ''भोः सोमदत्त! त्रयाणां मासानाम् अनन्तरं भवतः मरणं भविष्यति'' इति।

तस्य वचनं श्रुत्वा भीतः सोमदत्तः तस्य निवारणोपायं पृच्छति। तदा तपस्वी तस्मै एकम् उपायं सूचयति।

''चिन्ता मास्तु। अहम् भवते एकम् उपायं सूचयामि। भवान् भवतः एकां प्रतिमां रचयतु। यदा यमभटाः आगच्छन्ति तदा भवान् भवतः प्रतिमायाः पार्श्वे तिष्ठतु'' इति। शिल्पी तथैव करोति। मासत्रयानन्तरं द्वौ यमभटौ आगतवन्तौ। सः तयोः आगमनं ज्ञात्वा तपस्वी यथा उक्तवान् तथैव कृतवान्। यमभटौ समानरूपे विद्यमानौ द्वौ पुरुषौ दृष्ट्वा कः सोमदत्तः इति न ज्ञातवन्तौ।

अतः तौ रिक्तहस्तेन पुनः यमलोकं गतवन्तौ। यमराजाय सर्वं वृत्तान्तं निवेदितवन्तौ। मासत्रयानन्तरं पुनः यमराजः एव स्वयं भटाभ्यां सह भूलोकम् आगतवान्। तदा अपि सोमदत्तः तमेव उपायं कृतवान्। यमराजः अपि द्वयोः मध्ये अन्तरं न ज्ञातवान्।

तदा यमधर्मराजः एकम् उपायं कृतवान्। तदा यमः शिल्पेः नैपुण्यं बहुधा प्रशंसितवान्। 'कः एतयोः शिल्पयोः शिल्पी। एतादृशः शिल्पी अन्यत्र कुत्रापि नास्ति' इत्यादिकम् उक्तवान्।

प्रशंसावचनैः आनन्दितः सोमदत्तः 'हे प्रभो! अहमेव एतस्य विग्रहस्य शिल्पी' इति आनन्देन उक्तवान्।

तदा राजभटौ सोमदत्तः कः, शिल्पः कः इति स्पष्टतया ज्ञातवन्तौ। झटिति तं सोमदत्तं गृहीत्वा यमलोकं गतवन्तौ।

एवं प्रशंसाप्रियः गर्वी च सोमदत्तः आपदि पतितवान्।



# बलिदमनम्

संस्कृतानुवादः - वि.प्रदीपकुमार
चरवाणी - ९४९१६४६५३२

तेलुगु मूलम् - डॉ.अल्लाडि.सन्ध्या
चित्राणि - श्री के.तुलसीप्रसादः

चित्रकथा गुरोराशीर्वादबलेन बलिचक्रवर्ती इन्द्रपदवीं प्राप्य अश्वमेधयागं कर्तुं निश्चिनोति।

स्वगुरुं शुक्राचार्यं प्रति बलिचक्रवर्ती, गुरुदेव! मम यागः निर्विघ्नेन सम्पद्यते वा?




यागे बलिः स्वदानगुणं बहिर्गमयति।




गुरुवर्य! भवताम् आशीर्वादबलेनैव इदं कार्यं प्रवर्तते।

अमुम् अश्वमेधयागविषयं अवगम्य इन्द्रः स्वमातरम् अदितिं प्रार्थयति।




अदितिः ब्रह्मादिदेवैः साकं श्रीमन्नारायणं प्रार्थयति।




वत्स! अस्माकं समेषां श्रीमन्नारायणः एक एव आश्रयः। तं प्रार्थयामः।

तदा श्रीमन्नारायणः अदितिगर्भात् अवतरामि इत्यनुगृह्णाति।




वामनरूपेण उद्भूतस्य नारायणस्य उपनयनसंस्कारं अदितिकश्यपौ कृतवन्तौ।



बलिचक्रवर्तिनः यागविषयम् अवगम्य सः वामनः इन्द्रपदवीं प्राप्तं बलिचक्रवर्तिनं प्रति गतवान्।



















अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

# रसप्रश्नाः

१. पाण्डवेषु गाण्डीवी कः?
अ. धर्मराजः आ. भीमः
इ. अर्जुनः ई. नकुलः

२. अर्जुनं प्रति गाण्डीवधनुः कः देवः दत्तवान्?
अ. अग्निः आ.वरुणः
इ. वायुः ई. इन्द्रः

३. अर्जुनं प्रति पाशुपतास्त्रं कः दत्तवान्?
अ. शिवः आ.विष्णुः
इ. ब्रह्मा ई. इन्द्रः

४. जरासन्धस्य जामाता कः?
अ. कंसः आ.जयद्रथः
इ. दुर्योधनः ई. भीमः

५. जरासन्धस्य पुत्र्योः नामनी के?
अ. अम्बा, अम्बालिका आ.द्रौपदी, शिखण्डी
इ. अस्ति, प्राप्ति ई.कुन्ती, माद्री

६. कंसस्य पिता कः?
अ. उग्रसेनः आ. शूरसेनः
इ. वीरसेनः ई. वृषसेनः

७. बभ्रुवाहनः कस्य पुत्रः?
अ. धर्मराजस्य आ. भीमस्य
इ. अर्जुनस्य ई. सहदेवस्य

८. भरतस्य माता का?
अ. सुमित्र आ.कैकेयी
इ. कौशल्या ई. शान्ता

समाधानानि - १.इ २. अ ३. अ ४. अ ५.इ ६. अ ७. इ ८. आ

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





Printed by Sri P.Ramaraju, M.A., Special Officer (Press & Publications), T.T.D. Press, Tirupati and Published by Dr. K.Radharamana,M.A., M.Phil., Ph.D., on behalf of Tirumala Tirupati Devasthanams and Publised at Tirupati - 517 501. Editor: Dr.V.G.Chokkalingam, M.A., Ph.D.




११.०८.२०२१ दिने ति.ति.दे. अध्यक्षपदवीस्वीकर्तारः श्री वै.वी.सुब्बारेड्डि महोदयाः। अस्मिन् सन्दर्भे अध्यक्षेभ्यः चित्रपटप्रदातारः कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि, ऐ.ए.एस्. महाभागाः। तत्र श्री चेविरेड्डि भास्कर् रेड्डि, एम्.एल्.ए. तथा तुडा अध्यक्षाः, ति.ति.दे. ए.ई.ओ. श्री ए.वी धर्मारेड्डि, ऐ.डि.ई.एस्., ति.ति.दे. जे.इ.ओ. श्री श्रीमती सदाभार्गवी, ऐ.ए.एस्., तथा इतराधिकारिणश्च भागं गृहीतवन्तः।




२०-०८-२०२१ दिने तिरुचानूरु, श्रीपद्मावतीदेव्याः आलये शास्त्रोक्ततया आचरितं वरलक्ष्मीव्रतम्। यथा तिरुमलक्षेत्रे तथा तिरुचानूरुक्षेत्रेऽपि तुलाभारसेवाकार्यक्रमस्य शुभारम्भदृश्यम्। तत्सन्दर्भे सपत्नीकाः ति.ति.दे. अध्यक्षाः श्री वै.वी.सुब्बारेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्.जवहर रेड्डी, ऐ.ए.एस्., ति.ति.दे. संयुक्तकार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी, ऐ.ए.एस्., तथा इतरोन्नताधिकारिणश्च भागं गृहीतवन्तः।





३०.०८.२०२१ दिने श्रीकृष्णष्टमीसन्दर्भे ति.ति.दे. पक्षतः तिरुमलक्षेत्रे प्रप्रथमवारं ''नवनीतसेवा'' कार्यक्रमः प्रारब्धः। तत्सन्दर्भे ति.ति.दे. अध्यक्षाः श्री वै.वी.सुब्बारेड्डि तथा ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्.जवहर् रेड्डी, ऐ.ए.एस्. महाभागैः गोशालातः नवनीतपात्रनयनमहोत्सवस्य तथा नवनीतमथनस्य च दृश्ये। अस्मिन् कार्यक्रमे ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मारेड्डी, ऐ.डी.ई.एस्., इतरोन्नताधिकारिणश्च भागं गृहीतवन्तः।



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-08-2021 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for
India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

तिरुचानूरु श्रीपद्मावतीदेव्याः पवित्रोत्सवाः
(२०२१ सेप्टेम्बर् १८ तः २१ पर्यन्तम्)